**देवी**—[7]दिष्ट्यापरिक्षताराधनेनार्यो वर्धते !

**गणदासः**—देवीपरिग्रह एव मे वृद्धिहेतुः । (विदूषकं विलोक्य) गौतम, वदेदानीं यत्ते मनसि वर्तते ।

**विदूषकः**—[8]प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता !

**परिव्राजिका**—अहो प्रयोगाभ्यन्तरः प्रश्नः ! (सर्वे प्रहसिताः । मालविका-स्मितं करोति ।)

**राजा**—(आत्मगतम्) उपात्तसारश्चक्षुषा मे स्वविषयः । यदनेन—

**स्मयमानमायताक्ष्याः किञ्चिदभिव्यक्तदशनशोभि मुखम् ।**
**असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥**

**गणदासः**— महाब्राह्मण, न खलु प्रथमं नेपथ्यदर्शनमिदम् । अन्यथा कथं त्वामर्चनीयं नार्चयिष्यामः ।

**विदूषकः**—[9]मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेऽन्तरिक्षे जलपान-मिष्टम् । अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यतोऽत्र-भवत्या शोभनं भणितं ततोऽस्यै इदं पारितोषिकं प्रयच्छामि । (इति राज्ञो हस्तात्कटकमाकर्षति ।)

**देवी**—[10]तिष्ठतावत् । गुणान्तरमजानन्किं निमित्तं त्वमाभरणं ददासि ?

**विदूषकः**—[11]परकीयमिति कृत्वा ।

**देवी**—(आचार्यं विलोक्य) [12]आर्य गणदास, दर्शितोपदेशा ते शिष्या ।

**गणदासः**—वत्से, प्रतिष्ठस्वेदानीम् । (मालविका सहाचार्येण निष्क्रान्ता)

**विदूषकः**—(जनान्तिकम्) [13] एतावान्मे मतिविभवो भवन्तं सेवितुम् ।

**राजा**—अलमलं परिच्छेदेन । अहं हि

**भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।**
**द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणीम् ॥ ११ ॥**

**विदूषकः**—(जनान्तिकम्) [14]दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि ।

(प्रविश्य) **हरदत्तः**—मदीयमिदानीं प्रयोगमवलोकयितुं क्रियतां प्रसादः ।

**राजा**—(आत्मगतम्) अवसितो दर्शनार्थः । (दाक्षिण्यमवलम्ब्य प्रकाशम्) ननु पर्युत्सुका एव वयम् ।

**हरदत्तः**—अनुगृहीतोऽस्मि ।

(नेपथ्ये) **वैतालिकः**—जयतु जयतु देवः! उपारूढो मध्याह्नः । तथा हि—

**पत्रच्छायासु हंसा मुकुलितनयना दीर्घिका पद्मिनीनां**
**सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।**
**बिन्दुक्षेपान्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं**
**सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥१२॥**

**विदूषकः**—[15]अविध अविध! अस्माकं पुनर्भोजनवेलोपस्थिता । उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति । (हरदत्तं विलोक्य) किमिदानीं भणसि ?

**हरदत्तः**—नास्ति वचनस्यान्यस्यावकाशोऽत्र ।

**राजा**—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः । विश्राम्यतु भवान् ।

**हरदत्तः**—यदाज्ञापयति देवः । (निष्क्रान्तः)

**देवी**—[16]निर्वर्तयत्वार्यपुत्रो मज्जनविधिम् ।

**विदूषकः**—[17]भवति, विशेषेण पानभोजनं त्वरय ।

**परिव्राजिका**—(उत्थाय) स्वस्ति भवते (इति सपरिजनया देव्या सह निष्क्रान्ता)

**विदूषकः**—[18]भो वयस्य, न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका ।

**राजा**—वयस्य,

**अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।**
**परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ १३ ॥**

किं बहुना ? सखे, चिन्तयितव्योऽस्मि ।

**विदूषकः**—[19]भवतोऽप्यहम् । दृढं विपणिकन्दुरिव मे उदराभ्यन्तरं दह्यते ।

**राजा**—एवमेव भवान्सुहृदर्थेऽपि त्वरताम् ।

**विदूषकः**—[20]गृहीतः क्षणः । किन्तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीन-

दर्शना तत्रभवती । भवानपि सूनापरिसरचर इव विहङ्ग आमिष-लोलुपो भीरुकश्च । तदनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे।

**राजा**—कथमनातुरो भविष्यामि ?

**सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।**
**सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १८ ॥**

(इति निष्क्रान्ताः सर्वे)

## इति द्वितीयोऽङ्कः



## अथ तृतीयोऽङ्कः

(ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका)

**समाहितिका**—[1]आज्ञप्तास्मि भगवत्या । समाहितिके, देव्या उपायनार्थं बीजपूरकं गृहीत्वागच्छेति । यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती तिष्ठति । यावदेनामुपसर्पामि ।

(ततः प्रविशत्युद्यानपालिका)

**प्रथमा**—(उपसृत्य) [2]मधुकरिके, अपि सुखस्ते उद्यानव्यापारः ?

**द्वितीया**—[3] अहो समाहितिका ! सखि, स्वागतं ते ।

**समाहितिका**—[4]हला, भगवती आज्ञापयति —' अरिक्तपाणिनास्मादृशजनेन तत्र भवती देवी द्रष्टव्या । तद्बीजपूरकेण शुश्रूषयितुमिच्छामि ' —इति ।

**मधुकरिका**—[5]ननु संनिहितं बीजपूरकम् । कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ।

**समाहितिका**—[6]द्वावपि किलागमिनौ प्रयोगनिपुणौ च । किन्तु शिष्यागुणविशेषेण मालविकाया उपदेशः प्रशंसितः ।

**मधुकरिका**—[7]अथ मालविकागतं कौलीनं किमिति श्रूयते ?

**समाहितिका**—[8]दृढं किल तस्यां साभिलाषो भर्ता । किंतु केवलं धारिण्याश्चित्तं रक्षन्प्रभुत्वं दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते । अतः परं न जाने । विसृज माम् ।

**मधुकरिका**—[9]एतच्छाखावलम्बिनं बीजपूरकं गृहाण ।

**समाहितिका**—[10]तथा । (इति नाट्येन बीजपूरकं गृहीत्वा) सखि, त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि । (इति स्थिता)

**मधुकरिका**—[11]सखि, सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै विज्ञापयामि ।

**समाहितिका**—[12]युज्यते । अधिकारः खलु तव । (इति निष्क्रान्ते)

## इति प्रवेशकः

(ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च)

**राजा**—(आत्मानं विलोक्य)

**शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे**
**भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।**
**तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं**
**प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम् ॥ १ ॥**

**विदूषकः**—[13]अलं भवतो धीरत्वमुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका । श्रावितोऽयमर्थो यो भवता सन्दिष्टः ।

**राजा**—ततः किमुक्तवती ?

**विदूषकः**—[14]' विज्ञापय । अनुगृहीतास्म्यनेन नियोगेन । किन्तु सा तपस्विनी देव्याधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि घटयिष्यामि ' इति ।

**राजा**—भगवन् संकल्पयोने, प्रतिबन्धवत्सु चापि विषयेष्वभिनिवेशकारी किं तथा प्रहरसि यथा जनोऽयं न कालान्तरक्षमो भवति ! (सविस्मयम्)

**क रुजा हृदयप्रमाथिनी ? क च ते विश्वसनीयमायुधम् ।**
**मृदु तीक्ष्णतरं यदुच्यते, तदिदं मन्मथ दृश्यते त्वयि ॥ २ ॥**

**विदूषकः**—[15]ननु भणामि तस्मिन्साधनीये कृत उपक्षेपः । पर्यवस्थापयतु भवानात्मानम् ।

**राजा**—अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्वनु खलु यापयामि ?

**विदूषकः**—[16]अद्यैव प्रथमावतारसुभगानि रक्तकुरबकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान् । इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति । भवताप्यस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छावः ।

**राजा**—न क्षममिदम् ।

**विदूषकः**—[17]कथमिव ?

**राजा**—वयस्य, निसर्गनिपुणाः स्त्रियः । कथमन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न मां लक्षयिष्यति ? अतः पश्यामि ।

**उचितः प्रणयो वरं विहन्तुं**
**बहवः खण्डनहेतवो हि दृष्टाः ।**
**उपचारविधिर्मनस्विनीनां**
**न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ ३ ॥**

**विदूषकः**—[18]नार्हति भवानन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् ।

**राजा**—(विचिन्त्य) तेन हि प्रमदवन मार्गमादेशय ।

**विदूषकः**—[19]इत इतो भवान् । (उभौ परिक्रामतः) [20]एतत्प्रमदवनं पवनेरचलाभिः पल्लवाङ्गुलिभिस्त्वरयतीव भवन्तं प्रवेष्टुम् ।

**राजा**—(स्पर्शसुखं रूपयित्वा) अभिजातः खलु वसन्तः । सखे, पश्य

आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानाम्
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

**विदूषकः**—[21]प्रविश निर्वृतिलाभाय । (उभौ प्रविशतः) अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव विलोभयितुकामया मधुलक्ष्म्या युवतिविशेषलज्जयितृकं वसन्तकुसुमनेपथ्यं गृहीतम् ।

**राजा**—(विस्मयात्) एतदवलोकयामि ।

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥

(उभौ नाट्येन उद्यानशोभां निर्वर्णयतः । ततः प्रविशति पर्युत्सुका मालविका)

**मालविका**—[22]अविज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जामि । कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम् । न जानेऽप्रतिकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । (इति कतिचित्पदानि गत्वा) आ कुत्र खलु प्रस्थितास्मि! (इति स्मृतिमभिनीय) आदिष्टास्मि देव्या ! 'गौतम, चापलाद्दोलापरिभ्रष्टायाः सरुजो मम चरणः । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तयेति । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततोऽहमभिलाषपूरयितृकं प्रसादं दास्यामि' इति । यावन्नियोगभूमि प्रथमं गता भवामि, तावदनुपदं मम चरणालङ्कारहस्तया बकुलावलिकयागन्तव्यम्, परिदेवयिष्यामि तावद्विस्रब्धं मुहूर्तकम् । (इति परिक्रामति)

**विदूषकः**—(दृष्ट्वा) [23]वयस्य, एतत्खलु सीधुपानोद्वेजितस्य मत्स्यखण्डिकोपनता ।

**राजा**—अयि, किमेतत् ?

**विदूषकः**—[24] एषा नातिपरिचारवेषोत्सुकवदनैकाकिनी मालविकाऽदूरे वर्तते !

**राजा**—(सहर्षं) कथं मालविका ?

**विदूषकः**—[25]अथ किम् ।

**राजा**—शक्यमिदानीम् जीवितमवलम्बितुम् ।

**त्वदुपलभ्य समीपगतां प्रियां**
**हृदयमुच्छ्वसितं मम विक्लवम् ।**
**तरुवृतां पथिकस्य जलार्थिनः**
**सरितमारसितादिव सारसात् ॥ ६ ॥**

अथ क्व तत्रभवती ?

**विदूषकः**—[26]एषा तरुराजिमध्यान्निष्क्रान्तेत एवाभिवर्तमाना दृश्यते ।

**राजा**—(विलोक्य सहर्षम् ) वयस्य, पश्यामि ।

**विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः ।**
**अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥**

सखे, पूर्वस्मादतिमनोहरमवस्थान्तरमुपारूढा तत्र भवती । तथाहि—

**शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।**
**माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥**

**विदूषकः**—[27]एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति ।

**राजा**—सौहार्दमेवं पश्यति ।

**मालविका**—[28]अयं स सुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया ममाशोकोऽनुकरोति । यावदस्य प्रच्छायशीतले शीतले शिलापट्टके निषण्णात्मानं विनोदयामि ।

**विदूषकः**—[29]श्रुतं भवता ? उत्कण्ठितास्मीति तत्रभवती मन्त्रयति ।

**राजा**—नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः—

**वोढा कुरबकरजसां किसलयपुटभेदशीकरानुगतः ।**
**अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः ॥ ९ ॥**

(मालविकोपविष्टा)

**राजा**—सखे, इतस्तावत् । आवां लतान्तरितौ भवावः ।

**विदूषकः**—[30]इरावतीमिवादूरे समर्थयामि ।

**राजा**—न हि कमलिनीं लब्ध्वा ग्राहमपेक्षते मतङ्गजः । (इति विलोकयन्स्थितः)

**मालविका**—[31]हृदय, निरवलम्बनादतिभूमिलङ्घिनस्ते मनोरथाद्विरम । किं मामायास्य ! (विदूषको राजानमवेक्षते)

**राजा**—प्रिये, पश्य वामत्वं स्नेहस्य ।

**औत्सुक्यहेतुं विवृणोषि तत्त्वं**
**तत्त्वावबोधैकरसो न तर्कः ।**
**तथापि रम्भोरु करोमि लक्ष्य-**
**मात्मानमेषां परिदेवितानाम् ॥ १० ॥**

**विदूषकः**—[32]सांप्रतं भवतो निस्संशयं भविष्यति । एषार्पितमदनसंदेशा विविक्ते एनां बकुलावलिकोपस्थिता ।

**राजा**—अपि स्मरेदसावस्मदभ्यर्थनाम् ?

**विदूषकः**—[33]किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति ? अहं तावन्न विस्मरामि ।

(प्रविश्य चरणालङ्कार हस्ता) **बकुलावलिका**—[34]अपि सुखं सख्याः ?

**मालविका**—[35]अहो बकुलावलिका ! सखि, स्वागतं ते । उपविश ।

**बकुलावलिका**—(उपविश्य) [36]सखि, त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं चरणमुपनय । यावत्सालक्तकं सनूपुरं च करोमि ।

**मालविका**—(आत्मगतम्) [37]हृदय, सुखितस्यालमुपस्थितोऽय विभव इति । कथमिदानीमात्मानं मोचयेयम् ! अथवेदानीमेतदेव मृत्युमण्डनं मे भविष्यति ।

**बकुलावलिका**—[38]किं विचारयसि ? उत्सुका खल्वस्य तपनीयाशोकस्य मुकुलोद्गमे देवी !

**राजा**—कथमशोकदोहदनिमित्तोऽयमारम्भः ?

**विदूषकः**—[39]किं नु खलु जानासि त्वं—'मम कारणाद्देवी मामन्तःपुरनेपथ्येन योजयिष्यति' इति ?

**मालविका**—[40]सखि, मर्षय तावदेनम् । (इति पादमुपहरति)

**बकुलावलिका**—[41]अयि, शरीरमसि मे । (इति नाट्येन चरणसंस्कारमारभते)

**राजा**—**चरणान्तनिवेशितां प्रियायाः**

**सरसां पश्य वयस्य रागरेखाम् ।**
**प्रथमामिव पल्लवप्रसूतिं**
**हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥**

**विदूषकः**—[42]चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः ।

**राजा**—सम्यगाह भवान् ।

**नवकिसलयरागेणाग्रपादेन बाला**
**स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।**
**अकुसुमितमशोकं दोहदापेक्षया वा**
**प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥ १२ ॥**

**विदूषकः**—[43]प्रहरिष्यति तत्रभवती त्वामपराद्धम् ।

**राजा**—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

(ततः प्रविशति युक्तमदा इरावती चेटी च)

**इरावती**—[44]चेटि निपुणिके, शृणोमि बहुशो मदः किल स्त्रीजनस्य मण्डनमिति । अपि सत्यो लोकवादोऽयम् ?

**निपुणिका**—[45]प्रथमं लोकवाद एव । अद्य सत्यः संवृत्तः ।

**इरावती**—[46]संकीर्तनशंसिनालं स्नेहेन । कथय कुत इदानीमवगन्तव्यो दोलागृहं प्रथमं गतो भर्ता न वेति !

**निपुणिका**— [47]भट्टिन्या अखण्डितात्प्रणयात् ।

**इरावती**—[48]अलं सेवया । मध्यस्थतां परिगृह्य भण ।

**निपुणिका**—[49]वसन्तोपायनलोलुपेनार्यगौतमेन कथितम् । त्वरतां भट्टिनी ।

**इरावती**—(अवस्थासदृशं परिक्रम्य) [50]चेटि, मदेन क्लाम्यमानमात्मानमार्यपुत्रदर्शने हृदयं त्वरयति । चरणौ पुनर्न मे प्रसरतः ।

**निपुणिका**—[51]ननु प्राप्ते स्वो दोलागृहम् ।

**इरावती**—[52]निपुणिके, आर्यपुत्रोऽत्र न दृश्यते ।

**निपुणिका**—[53]भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् । इमं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टं प्रविशावः ।

**इरावती**—[54]तथा ।

**निपुणिका**—(विलोक्य) [55]अवलोकयतु भट्टिनी । चूताङ्कुरं विचिन्वत्योः पिपीलिकाभिर्दष्टम् ।

**इरावती**—[56]कथमिव ?

**निपुणिका**—[57]एषाशोकपादच्छायायां मालविकाया बकुलावलिका चरणालङ्कारं निर्वर्तयति ।

**इरावती**—(शङ्कां रूपयित्वा) [58]अभूमिरियं मालविकायाः । कथमत्र तर्कयसि ?

**निपुणिका**—[59]तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याशोकदोहदाधिकारे मालविका नियुक्तेति । अन्यथा कथं देवी स्वयंधारितं नूपुरयुगलं परिजनस्याभ्यनुज्ञास्यति !

**इरावती**—[60]महती खल्वस्याः संभावना ।

**निपुणिका**—[61]किमन्विष्यते भर्ता ?

**इरावती**—[62]सखि, न मे चरणावन्यतः प्रवर्तेते । मदो मां विकारयति । आशङ्कितस्य तावदन्तं गमिष्यामि । (इति मालविकां निर्वर्ण्य, आत्मगतम्) स्थाने खलु कातरं मे हृदयम् ।

**बकुलावलिका**—(मालविकायै चरणं दर्शयन्ती) [63]अपि रोचते ते रागरेखाविन्यासः ?

**मालविका**—[64]सखि, आत्मनश्चरण इति लज्जे एनं प्रशंसितुम् । तेन प्रसाधनकलायामभिविनीतासि ।

**बकुलावलिका**—[65]अत्राहं भर्तुः शिष्यास्मि ।

**विदूषकः**—[66]त्वरय तावदेनां गुरुदक्षिणायै ।

**मालविका**—[67]दिष्ट्या न गर्वितासि ।

**बकुलावलिका**—[68]उपदेशानुरूपौ चरणौ लब्ध्वा द्य तावद्गर्विता भविष्यामि । (रागं विलोक्य, आत्मगतम्) हन्त, सिद्धं मे दूत्यम् ! (प्रकाशम्) सखि, एकस्य ते चरणस्यावमितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम् ।

**राजा**—सखे, पश्य ।

**आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन वीजयितुम् ।**
**प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥ १३ ॥**

**विदूषकः**—[69]कुतस्तेऽनुशयः ? चिरं भवता एतत्क्रमेणानुभवितव्यम् ।

**बकुलावलिका**—[70]सखि, अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव । (इरावती निपुणिकामपेक्षते)

**राजा**—ममेयमाशीः ।

**मालविका**—[71]मा अवचनीयं मन्त्रयस्व ।

**बकुलावलिका**—[72]मया मन्त्रयितव्यमेव मन्त्रितम् ।

**मालविका**—[73]प्रिया खल्वहं तव ?

**बकुलावलिका**—[74]न केवलं मम ।

**मालविका**—[75]कस्य खल्वन्यस्य ?

**बकुलावलिका**—[76]गुणेष्वभिनिवेशिनो भर्तुरपि ।

**मालविका**—[77]अलीकं मन्त्रयसे । एतदेव मयि नास्ति ।

**बकुलावलिका**—[78]सत्यं त्वयि नास्ति । भर्तुः कृशेषु वरपाण्डुरेषु दृश्यतेऽङ्गेषु ।

**निपुणिका**—[79]प्रथमं गुणितमिव हताशाया उत्तरम् ।

**बकुलावलिका**—[80]अनुरागोऽनुरागेण प्रत्येष्टव्य इति सुजनवचनं प्रमाणीकुरु ।

**मालविका**—[81]किमात्मनश्छन्देन मन्त्रयसे ?

**बकुलावलिका**—[82]नहि नहि । भर्तुः खल्वेतानि प्रणयमृदुकान्यक्षराणि वक्त्रान्तरितानि ।

**मालविका**—[83]सखि, देवीं चिन्तयित्वा न मे हृदयं विश्वसिति ।

**बकुलावलिका**—[84]मुग्धे, भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वः किं न चूतप्रसवोऽवतंसयितव्यः ?

**मालविका**—[85]त्वं तावद्दुर्जातेऽत्यन्तं सहाया भव ।

**बकुलावलिका**—[86]विमर्दसुरभिर्बकुलावलिका खल्वहम् ?

**राजा**—साधु बकुलावलिके, साधु ।

**भावज्ञानानन्तरं प्रस्तुतेन**
**प्रत्याख्याने दत्तयुक्तोत्तरेण ।**
**वाक्येनेयं स्थापिता स्वे निदेशे**
**स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ १४ ॥**

**इरावती**—[87]पश्य । कारितमेव बकुलावलिकयैतत्पदं मालविकायाः ।

**निपुणिका**—[88]भट्टिनि, अधिकारस्योचित उपदेशः ।

**इरावती**—[89]स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्थानन्तरं चिन्तयिष्यामि ।

**बकुलावलिका**—[90]एष द्वितीयोपि ते निर्वृत्तपरिकर्मा चरणः । यावदेनं सनूपुरं करोमि । (इति नाट्येन नूपुरयुगलमामुच्य) हला, उत्तिष्ठ । अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ । (उभे उत्तिष्ठतः)

**इरावती**—[91]श्रुतो देव्या नियोगः । भवत्विदानीम् ।

**बकुलावलिका**—[92]एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ।

**मालविका**—(सहर्षम्) [93]किं भर्ता ?

**बकुलावलिका**—(सस्मितम्) [94]न तावद्भर्ता । एषोऽशोकशाखावलम्बी-पल्लवगुच्छः । अवतंसयैनम् ।

**विदूषकः**—[95]श्रुतं भवता ?

**राजा**—सखे, पर्याप्तमेतावता कामिनाम् ।

**अनातुरोत्कण्ठितयोः प्रसिद्ध्यता**
**समागमेनापि रतिर्न मां प्रति ।**
**परस्परप्राप्तिनिराशयोर्वरं**
**शरीरनाशोऽपि समानुरागयोः** ॥ १५ ॥

(मालविका रचितपल्लवावतंसा पादमशोकाय प्रहिणोति)

**राजा**—वयस्य,

**आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।**
**उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये** ॥ १६ ॥

**बकुलावलिका**—[96]सखि, नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्गममन्थरो भवेत्, यस्ते चरणसत्कारं लब्ध्वा ।

**राजा**—**अनेन तनुमध्यया मुखरनूपुराराविणा**
**नवाम्बुरुहकोमलेन चरणेन संभावितः ।**
**अशोक यदि सद्य एव मुकुलैर्न संपत्स्यसे**
**वृथा वहसि दोहदं ललितकामिसाधारणम्** ॥ १७ ॥

सखे, वचनानुसरणपूर्वकं प्रवेष्टुमिच्छामि ।

**विदूषकः**—[97]एहि । एनां परिहासयिष्यामि । (उभौ प्रवेशं कुरुतः)

**निपुणिका**—[98]भट्टिनि, भट्टिनि, भर्तात्र प्रविशति ।

**इरावती**—[99]एवं प्रथमं मम चिन्तितं हृदयेन ।

**विदूषकः**—(उपेत्य) [100]युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोकः एनं वामपादेन ताडयितुम् ?

**उभे**—(ससंभ्रमम्) [101]अहो भर्ता !

**विदूषकः**—[102]बकुलावलिके, गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ? (मालविका भयं रूपयति)

**निपुणिका**—[103]भट्टिनि, पश्य किं प्रवृत्तमार्यगौतमेन ।

**इरावती**—[104]कथं खलु ब्रह्मबन्धुरन्यथा भवति !

**बकुलावलिका**—[105]आर्य, एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ! (इत्यात्मना सहैनां प्रणिपातयति)

**राजा**—यदैवमनपराद्धासि । उत्तिष्ठ भद्रे । (इति हस्तेन गृहीत्वैनामुत्थापयति)

**विदूषकः**—[106]युज्यते । देव्यत्र मानयितव्या ।

**राजा**—**किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे ।**
**चरणस्य न ते बाधा संप्रति वामोरु वामस्य ॥ १८ ॥**

(मालविका लज्जां रूपयति)

**इरावती**—[107]अहो नवनीतकल्पहृदय आर्यपुत्रः !

**मालविका**—[108]बकुलावलिके, एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः ।

**बकुलावलिका**—[109]विज्ञापय भर्तारं विसर्जयेति ।

**राजा**—भद्रे, यास्यसि ? मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ।

**बकुलावलिका**—[110]अवहिता शृणु । आज्ञापयतु भर्ता ।

**राजा**—

**धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।**
**स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥**

**इरावती**—(सहसोपसृत्य) [111]पूरय पूरय । अशोकः कुसुमं न दर्शयति ; अयं पुनः पुष्प्यत्येव । (सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः)

**राजा**—(अपवार्य) वयस्य, का प्रतिपत्तिरत्र ?

**विदूषकः**—[112]किमन्यत् ? जङ्घाबलमेव ।

**इरावती**—[113]बकुलावलिके, त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् ।

**उभे**—[114]प्रसीदतु भट्टिनी ! के आवां भर्तुः प्रणयपरिग्रहस्य ? (निष्क्रान्ते)

**इरावती**—[115]अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तया हरिण्येवैतन्न विज्ञातम् ।

**विदूषकः**—(जनान्तिकम्) [116]प्रतियोजयेदानीं किमपि । कर्मगृहीतेनापि कुम्भीलकेन संधिच्छेदे शिक्षितोऽस्मीति वक्तव्यं भवति ।

**राजा**—सुन्दरि, न मे मालविकया कश्चिदर्थः । मया त्वं चिरयसीति यथाकथञ्चिदात्मा विनोदितः ।

**इरावती**—[117]विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति । अन्यथा दुःखभागिन्येवं न क्रियते ।

**विदूषकः**—[118]मा तावता तत्रभवतो दाक्षिण्यस्योपरोधं भणितु, समापत्तिदृष्टेन देव्याः परिजनेन संकथापराधेन संधाप्यताम् । अत्र त्वमेव प्रमाणम् ।

**इरावती**—[119]ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ?

(इति रुषा प्रस्थिता)

**राजा**—(अनुसरन्) प्रसीदतु भवती ! (इरावती रशनासंधारितचरणा व्रजत्येव)

**राजा**—सुन्दरि, न शोभते प्रणयिनि जने निरपेक्षता ।

**इरावती**—[120] शठ, अविश्वसनीयहृदयोऽसि ।

**राजा**—**शठ इति मयि तावदस्तु ते**
**परिचयवत्यवधीरणा प्रिये ।**
**चरणपतितया न चण्डिकां**
**विसृजसि मेखलयापि याचिता ॥ २० ॥**

**इरावती**—[121]इयमपि हताशा त्वामेवानुसरति ! (रशनामादाय राजानं ताडयितुमिच्छति)

**राजा**—इयमिरावती

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

इरावती—[122]किं मामेव भूयोऽप्यपराद्धां करोषि ?

राजा—(सरशनं हस्तमवलम्बयति)

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च ॥ २२ ॥

नूनमिदमनुज्ञातम् । (इति पादयोः पतति)

इरावती—[123]न खल्विमौ मालविकाचरणौ, यौ ते हर्षदोहदं पूरयिष्यतः ।

(इति निष्क्रान्ता सह चेट्या)

विदूषकः—[124]उत्तिष्ठ । कृतप्रसादोऽसि ।

राजा—(उत्थाय, इरावतीमपश्यन्) कथं गतैव प्रिया !

विदूषकः—[125]वयस्य, दिष्ट्या अनेनाविनयेनाप्रसन्नागतैषा । तद्वयं शीघ्रमपक्रामामः, यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति ।

राजा—अहो मदनस्य वैषम्यम् !

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

(इति निष्क्रान्तः सह वयस्येन)

इति तृतीयोऽङ्कः



## अथ चतुर्थोऽङ्कः

(ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च)

**राजा**—(आत्मगतम्)

> **तामाश्रित्य श्रुतिपथगतामास्थया बद्धमूलः**
> **संप्राप्तायां नयनविषयं रूढरागः प्रवालः ।**
> **हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वा—**
> **त्कुर्यात्कान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥**

(प्रकाशम्) सखे गौतम !

**प्रतीहारी**—[1]जयतु जयतु भर्ता ! असंनिहितो गौतमः ।

**राजा**—(आत्मगतम्) आः, मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

(प्रविश्य) **विदूषकः**—[2]वर्धतां भवान् !

**राजा**—जयसेने, जानीहि तावत्क्व देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ।

**प्रतीहारी**—[3]यद्देव आज्ञापयति । (इति निष्क्रान्ता)

**राजा**—गौतम, को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ?

**विदूषकः**—[4]यो बिडालगृहीतायाः परभृतिकायाः ।

**राजा**—(सविषादम्) कथमिव ?

**विदूषकः**—[5]सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता ।

**राजा**—ननु मत्सम्पर्कमुपलभ्य ?

**विदूषकः**—[6]अथ किम् ।

**राजा**—क एवं विमुखोऽस्माकम् ? येन चण्डीकृता देवी ।

**विदूषकः**—[7]शृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिकागता ।

**राजा**—ततस्ततः ?

**विदूषकः**—[8]ततः सा देव्या पृष्टा । किन्नवलोकितो वल्लभजन इति । तयोक्तम् । मन्दो व उपचारः, यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ।

**राजा**—निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति ।

**विदूषकः**—[9]ततस्तयानुखिद्यमाना सा भवतोऽविनयमन्तरेण परिगतार्था कृता।

**राजा**—अहो दीर्घरोषता तत्रभवत्याः ! अतः परं कथय ।

**विदूषकः**—[10]किमतः परम् ? मालविका बकुलावलिका च निगलपद्याव-दृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः ।

**राजा**—कष्टं कष्टम् !

**मधुरस्वरा परभृता भ्रमरी च विबुद्धाचूतसङ्गिन्यौ ।**
**कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥**

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ?

**विदूषकः**—[11]कथं भविष्यति ? यत्सारभाण्डगृहे व्यापृता माधविका देव्या सदिष्टा । ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या मालविका बकुलावलिका चेति ।

**राजा**—(निःश्वस्य सपरामर्शम्) सखे, किमत्र कर्तव्यम् ?

**विदूषकः**—(विचिन्त्य) [12]अस्त्यत्रोपायः ।

**राजा**—क इव ?

**विदूषकः**—(सदृष्टिक्षेपम्) [13]कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । (इत्युपश्लिष्य कर्णे) एवमिव (इत्यावेदयति)

**राजा**—(सहर्षम्) सुष्ठु । प्रयुज्यतां सिद्धये ।

(प्रविश्य) **प्रतीहारी**—[14]देव, प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

**राजा**—तेन त्वस्मत्प्रवेशयोग्योऽयमवसरः ।

**विदूषकः**—[15]तद्गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ।

**राजा**—जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु ।

**विदूषकः**—[16]तथा । (इति कर्णे) एवमिव भवति । (इत्यावेद्य निष्क्रान्तः)

**राजा**—जयसेने, प्रवातशयनमार्गमादेशय ।

**प्रतीहारी**—[17]इत इतो देवः ।

(ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः)

**देवी**—[18]भगवति, रमणीयं कथावस्तु । ततस्ततः ?

**परिव्राजिका**—(सदृष्टिक्षेपम्) देवि, अतः परं पुनः कथयिष्यामि । अत्र भगवान्विदिशेश्वरः संप्राप्तः ।

**देवी**—[19]अहो भर्ता ! (इत्युत्थातुमिच्छति)

**राजा**—अलमलमुपचारयन्त्रणया ।

**अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।**
**चरणं रुजा परीतं कलभाषिणि मां च पीडयितुम् ॥ ३ ॥**

**देवी**—[20]जयत्वार्यपुत्रः !

**परिव्राजिका**—विजयतां देवः ।

**राजा**—(परिव्राजिकां प्रणम्योपविश्य) देवि, अपि सह्या वेदना ?

**देवी**—[21]अद्यास्ति मे विशेषः ।

(ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः)

**विदूषकः**—[22]परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः । (सर्वे विषण्णाः)

**राजा**—कष्टं कष्टम् ! क्व भवान्परिभ्रान्तः ?

**विदूषकः**—[23]देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि ।

**देवी**—[24]हा धिक्, हा धिक् ! अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि ।

**विदूषकः**—[25]तस्मिन्नशोकस्तबककारणात्प्रसारिते दक्षिणहस्ते कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि । नन्वेते द्वे दंशपदे । (इति दंशं दर्शयति)

**परिव्राजिका**—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते । स तावदस्य क्रियताम् !

**छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।**
**एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥ ४ ॥**

**राजा**—संप्रति विषवैद्यानां कर्म । जयसेने, ध्रुवसिद्धिः क्षिप्रमानीयताम् ।

**प्रतीहारी**—[26]यद्देव आज्ञापयति । (इति निष्क्रान्ता)

**विदूषकः**—[27]अहो, पापेन मृत्युना गृहीतोऽस्मि ।

**राजा**—मा कातरो भूः ! अविषोऽपि कदाचिद्दंशो भवेत् ।

**विदूषकः**—[28]कथं न भेष्यामि ? सिमसिमायन्ति मेऽङ्गानि । (इति विषवेगं रूपयति)

**देवी**—[29]हा, दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम् ।

(परिव्राजिका ससंभ्रममवलम्बते)

**विदूषकः**—(राजानं विलोक्य) [30]भोः, भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह ।

**राजा**—मा भैषीर्गौतम । स्थिरो भव । अचिरात्त्वां वैद्यश्चिकित्सयति ।

(प्रविश्य) **प्रतीहारी**—[31]देव, आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां स गौतम इति ।

**राजा**—तेन हि प्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।

**प्रतीहारी**—[32]तथा ।

**विदूषकः**—(देवीं विलोक्य) [33]भवति, जीवेयं वा न वा । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ।

**देवी**—[34] दीर्घायुर्भव ! (निष्क्रान्तौ विदूषकः प्रतीहारी च)

**राजा**—प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते ।

(प्रविश्य) **प्रतीहारी**—[35]जयतु भर्ता ! ध्रुवसिद्धिर्विज्ञापयति । उदकुंभविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ।

**देवी**—[36]इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देहि तत् ।

(इत्यङ्गुलीयकं ददाति । प्रतीहारी गृहीत्वा स्थिता)

**राजा**—जयसेने, कर्मसिद्धावाशु प्रतिपत्तिमानय ।

**प्रतीहारी**—[37]यद्देव आज्ञापयति ।

**परिव्राजिका**—यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः ।

**राजा**—भूयादेवम् ।

(प्रविश्य) **प्रतीहारी**—[38]जयतु देवो भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ।

**देवी**—[39]दिष्ट्या वचनीयान्मुक्तास्मि ।

**प्रतीहारी**—[40]एष पुनर्वाहतकोऽमात्यो विज्ञापयति । राजकार्यं बहुमन्त्रयितव्यं ; दर्शनेनानुग्रहमिच्छामीति ।

**देवी**—[41]गच्छत्वार्यपुत्रः कार्यसिद्धये ।

**राजा**—देवि, आतपक्रान्तोयमुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनम् ।

**देवी**—[42]बालिकाः, आर्यपुत्रवचनमनुतिष्ठत ।

**परिजनः**—[43]तथा । (निष्क्रान्ता देवी परिव्राजिका परिजनश्च)

**राजा**—जयसेने, मां गूढेन पथा प्रमदवनं प्रापय ।

**प्रतीहारी**—[44]इत इतो देवः ।

**राजा**—जयसेने, ननु समाप्तकार्यो गौतमः ?

**प्रतीहारी**—[45]अथ किम् ।

**राजा**—**इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।**
**संदिग्धमेव सिद्धौ कातरमाशङ्कते हृदयम् ॥ ५ ॥**

(प्रविश्य) **विदूषकः**—[46]वर्धतां भवान् ! सिद्धानि ते मङ्गलकार्याणि ।

**राजा**—जयसेने, त्वमपि स्वं नियोगमशून्यं कुरु ।

**प्रतीहारी**—[47]यद्देव आज्ञापयति । (इति निष्क्रान्ता)

**राजा**—गौतम, क्षुद्रा माधविका । न खलु किञ्चिद्विचारितमनया ?

**विदूषकः**—[48]देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति ?

**राजा**—न खलु मुद्रामधिकृत्य ब्रवीमि । एनयोर्द्वयोः किं निमित्तो मोक्षः । किं वा देव्याः परिजनमतिक्रम्य भवान्संदिष्ट इत्येवमनया प्रष्टव्यम् ।

**विदूषकः**—[49]ननु पृष्टोऽस्मि । पुनर्मन्दस्य मे तस्मिन्प्रत्युत्पन्ना मतिः ।

**राजा**—कथ्यताम् ।

**विदूषकः**—[50]भणितं मया । दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । तदवश्यं सर्वबन्धमोक्षः क्रियतामिति ।

**राजा**—(सहर्षम्) ततस्ततः ?

**विदूषकः**—[51]तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीत्यहं सन्दिष्ट इति । ततो युज्यते इति तथैवं संपादितोऽर्थः ।

**राजा**—(विदूषकं परिष्वज्य) सखे, प्रियोऽहं खलु तव ।

**न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।**
**कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ६ ॥**

**विदूषकः**—[52]त्वरतां भवान् । समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि ।

**राजा**—अहमेनां संभावयामि । गच्छाग्रतः ।

**विदूषकः**—[53] एतु भवान् (परिक्रम्य) इदं समुद्रगृहम् ।

**राजा**—(साशङ्कम्) वयस्य, एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते परिचारिका चन्द्रिका संनिकृष्टमागच्छति । इतस्तावदावां भित्तिगूढौ भवावः ।

**विदूषकः**—[54]अहो, कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका ।

(उभे यथोक्तं कुरुतः)

**राजा**—गौतम, कथं नु ते सखी मां प्रतिपालयति ? एहि एनां गवाक्षमाश्रित्य विलोकयामि ।

**विदूषकः**—[55]तथा । उभौ विलोकयन्तौ तिष्ठतः । (ततः प्रविशति मालविका बकुलावलिका च)

**बकुलावलिका**—[56]सखि, प्रणम भर्तारम् ।

**मालविका**—[57]नमस्ते ।

**राजा**—शङ्के मे प्रतिकृतिं निर्दिशति ।

**मालविका**—(सहर्षं द्वारमवलोक्य) [58]सखि, मां विप्रलम्भयसि ?

**राजा**—हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ।

10

**सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य।**
**वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७॥**

**बकुलावलिका**—[59]नन्वेष चित्रगतो भर्ता !

**उभे**—(प्रणिपत्य) [60]जयतु भर्ता !

**मालविका**—[61]सखि, तदा संभ्रमदृष्टे भर्तृरूपे यथा न वितृष्णास्मि तथापि मया भावितोऽवितृष्णदर्शनो भर्ता ।

**विदूषकः**—[62]श्रुतं भवता ? तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयति । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि ।

**राजा**—सखे, कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य ।

**कार्त्स्न्येन निर्वर्णयितुं च रूप-**
**मिच्छन्ति तत्पूर्वसमागमानाम् ।**
**न च प्रियेष्वायतलोचनानां**
**समग्रवृत्तीनि विलोचनानि ॥ ८॥**

**मालविका**—[63]सखि, कैषा पार्श्वपरिवृत्तमुखेन भर्त्रा मे स्निग्धया दृष्ट्या निध्यायते ?

**बकुलावलिका**—[64]नन्वियं पार्श्वगतेरावती !

**मालविका**—[65]सखि अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः ।

**बकुलावलिका**—(आत्मगतम्) [66]चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु । क्रीडिष्यामि तावदेतया । (प्रकाशम्) सखि, भर्तुर्वल्लभैषा ।

**मालविका**—[67]ततः किमिदानीमात्मानमायासयिष्यसि ? (इति सासूयं परावर्तते)

**राजा**—सखे, पश्य

**भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं**
**सासूयमाननमितः परिवर्तयन्त्या ।**

कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

विदूषकः—[68]अनुनयसज्ज इदानीं भव ।

मालविका—[69]आर्यगौतमोऽत्रैव संसेवत एनाम् । (पुनः स्थानान्तराभिमुखी-भवितुमिच्छति)

बकुलावलिका—(मालविकां रुद्ध्वा) [70]न खलु कुपितेदानीं त्वम् ?

मालविका—[71]यदि चिरं कुपितामेव मां मन्यसे, एष प्रत्यानीयते कोपः ।

राजा—(उपेत्य)

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥

बकुलावलिका—[72]जयतु जयतु भर्ता !

मालविका—(आत्मगतम्) [73]कथं चित्रगतो भर्ता मयासूयितः ? (प्रकाशं सप्रणयवदनमञ्जलिं करोति । राजा मदनकातर्यं रूपयति ।)

विदूषकः—[74]किं भवानुदासीन इव दृश्यते ?

राजा—अविश्वसनीयत्वात्सख्यास्तव ।

विदूषकः—[75]अत्रभवत्यामयं कथं तवाविश्वासः ?

राजा—श्रूयताम् ।

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणा-
त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव ।
मनसिजरुजा क्लिष्टस्यैवं समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥ ११ ॥

बकुलावलिका—[76]सखि, बहुशः किल भर्ता विप्रलब्धः । तत्त्वयात्मा विश्वसनीयः क्रियताम् ।

मालविका—[77]सखि, मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ।

**बकुलावलिका**—[78]भर्ता कथयत्वस्या उत्तरम् ।

**राजा**—**उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।**
**तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२ ॥**

**बकुलावलिका**—[79]अनुगृहीतास्मि ।

**विदूषकः**—(परिक्रम्य ससंभ्रमम्) [80]बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि निवारयाम एनम् ।

**बकुलावलिका**—[81]तथा (इति प्रस्थिता)

**राजा**—वयस्य, एवमेवास्मिन्रक्षणक्षणेऽवहितेन त्वया भवितव्यम् ।

**विदूषकः**—[82]एवमपि गौतमः सन्दिश्यते ?

**बकुलावलिका**—(परिक्रम्य) [83]आर्य गौतम, अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।

**विदूषकः**—[84]युज्यते । (निष्क्रान्ता बकुलावलिका) इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि । (तथा कृत्वा) अहो सुखस्पर्शता शिलाविशेषस्य !

(इति निद्रायते । मालविका ससाध्वसा तिष्ठति)

**राजा**—**विसृज सुन्दरि सङ्गमसाध्वसं**
**तव चिरात्प्रभृति प्रणयोन्मुखे ।**
**परिगृहाण गते सहकारतां**
**त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥**

**मालविका**—[85]देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।

**राजा**—अयि न भेतव्यम् ।

**मालविका**—(सोपालम्भम्) [86]यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता !

**राजा**—**दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम् ।**
**तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४॥**

तदनुगृह्णातां चिरानुरक्तोऽयं जनः (इति संश्लेषमुपजनयति । मालविका नाट्येन परिहरति)

**राजा**—(आत्मगतम्) रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । तथा हि । इयम्—

**हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः**
**स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।**
**पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं**
**व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे** ॥ १५ ॥

(ततः प्रविशतीरावती निपुणिका च)

**इरावती**—[87]हञ्जे निपुणिके, सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दशयित एकाकी आर्यगौतमो दृष्ट इति ।

**निपुणिका**—[88]अन्यथा कथं भर्त्र्यै विज्ञापयामि !

**इरावती**—[89]तेन हि तत्रैव गच्छामः संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च ।

**निपुणिका**—[90]सावशेषमिव भट्टिन्या वचनम् ।

**इरावती**—[91]अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् ।

**निपुणिका**—[92]अथेदानीं कथं नु भर्तैवमनुनीयते ?

**इरावती**—[93]मुग्धे, यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः ? केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः ।

**निपुणिका**—[94]इत इतो भट्टिनी । (उभे परिक्रामतः)

(प्रविश्य) **चेटी**—[95]जयतु जयतु भट्टिनी ! भट्टिनि, देवी भणति । "न मे मत्सरस्यैष कालः ! तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगलबन्धने कृता मालविका । यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि । यत्तवेष्टं तन्मे भण ।" इति ।

**इरावती**—[96]नागरिके, विज्ञापय देवीम् । "का वयं भट्टिनीं नियोजयितुम् । परिजननिग्रहेण दर्शितो मय्यनुग्रहः । कस्य वा प्रसादेनायं जनो वर्धते ?" इति ।

**चेटी**—[97]तथा । (इति निष्क्रान्ता)

**निपुणिका**—(परिक्रम्यावलोक्य च) [98]भर्त्रि, एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते ।

**इरावती**—[99]अत्याहितम् ! न खलु सावशेषो विषविकारो भवेत् !

**निपुणिका**—[100]प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् ।

**विदूषकः**—(उत्स्वप्नायते) [101] भवति मालविके !

**निपुणिका**—[102]श्रुतं भर्त्र्या, कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः ? सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकां स्वप्नायते ।

**विदूषकः**—[103]इरावतीमतिक्रामन्ती भव ।

**निपुणिका**—[104]एतदत्याहितम् ! इमं भुजङ्गभीरुं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेन दण्डकाष्ठेन स्तंभान्तरिता भीषयिष्यामि ।

**इरावती**—[105]अर्हत्येव कृतघ्न उपद्रवस्य ।

(निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति)

**विदूषकः**—(सहसा प्रबुद्ध्य) [106]अविधा अविधा ! भो वयस्य, सर्पो म उपरि पतितः ।

**राजा**—(सहसोपसृत्य) सखे, न भेतव्यम् ! न भेतव्यम् !

**मालविका**—(अनुसृत्य)[107]भर्तः, मा तावत्सहसा निष्काम । सर्प इति भण्यते ।

**इरावती**—[108]हा धिक् ! हा धिक् ! भर्ता इत एव धावति ।

**विदूषकः**—(सप्रहासम्) [109]कथं दण्डकाष्ठमेतत ! अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतम्, तन्मे फलितमिति ।

(प्रविश्य पटाक्षेपेण) **बकुलावलिका**—[110]मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ।

**इरावती**—(स्तम्भान्तरिता राजानं सहसोपेत्य)[111] अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ? (सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः)

**राजा**—प्रिये, अपूर्वोऽयमुपचारः ।

**इरावती**—[112]बकुलावलिके, दिष्ट्या दूत्याभिसारविषया संपूर्णा ते प्रतिज्ञा !

**बकुलावलिका**—[113]प्रसीदतु भट्टिनी ! किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति ?

**विदूषकः**—[114]मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि ।

**इरावती**—[115]कुपितेदानीमहं किं करिष्यामि ?

**राजा**—अस्थाने कोप इत्यनुपपन्नं त्वयि । तथा हि—

**कदा मुखं वरतनु कारणादृते**
**तवागतं क्षणमपि कोपपात्रताम् ।**
**अपर्वणि ग्रहकलुषेन्दुमण्डला**
**विभावरी कथय कथं भविष्यति ॥ १६ ॥**

**इरावती**—[116]अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो नन्वहं हास्या भवेयम् ।

**राजा**—त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः

**नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो दण्डम् ।**
**इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १७ ॥**

**इरावती**—[117]निपुणिके, गच्छ देवीं विज्ञापय, दृष्टो भवत्याः पक्षपातो नन्वद्येति ।

**निपुणिका**—[118] तथा । (इति निष्क्रान्ता)

**विदूषकः**—(आत्मगतम्) [119]अहो, अनर्थः संपतितः ! बन्धनभ्रष्टो गृहकपोतो बिडालिकाया आलोके पतितः ।

**निपुणिका**—(प्रविश्यापवार्य) [120]भट्टिनि, यदृच्छादृष्टया माधविकयाख्यातम् । एवं खल्वेतन्निर्वृत्तमिति । (इति कर्णे कथयति)

**इरावती**—(आत्मगतम्) [121]उपपन्नम् । सत्यमथमत्र ब्रह्मबन्धुना कृतः प्रयोगः । (विदूषकं विलोक्य) इयमस्य कामतन्त्रसचिवस्य नीतिः ।

**विदूषकः**— [122]भवति, यदि नीतिगतमेकमप्यक्षरं पठेयम्, ननु मयात्रभवान्प्रेषितो भवेत् ।

**राजा**—(आत्मगतम्) कथं नु खल्वस्मात्संकटादात्मानं मोचयिष्यामि ?

(प्रविश्य) **प्रतीहारी**—[123]देव, कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासितोत्सङ्गनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किञ्चित्प्रकृतिं प्रतिपद्यते ।

**राजा**— कष्टं कष्टम् ! कातरो बालभावः ।

**इरावती**—(सावेगम्) [124]त्वरतामार्यपुत्र एनां समाश्वासयितुम् । मास्याः संत्रासजनितो विकारो वर्धताम् ।

**राजा**—अयमेनामहं संज्ञापयामि । (इति सत्वरं परिक्रामति)

**विदूषकः**— [125]साधु रे पिङ्गलवानर, साधु ! परित्रातस्त्वया स्वपक्षः ।

(निष्क्रान्तो राजा विदूषकश्च । इरावती निपुणिका प्रतीहारी च)

**मालविका**—[126]सखि, देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वानुभवितव्यं भविष्यतीति ।

(नेपथ्ये) [127]आश्चर्यमाश्चर्यम् ! अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ।

(उभे श्रुत्वा प्रहृष्टे)

**बकुलावलिका**—[128]आश्वसितु सखी । सत्यप्रतिज्ञा देवी ।

**मालविका**—[129]तेन हि प्रमदवनपालिकायाः पृष्ठतो भवामि ।

**बकुलावलिका**—[130]तथा (इति निष्क्रान्ते)

## इति चतुर्थोऽङ्कः



# अथ पञ्चमोऽङ्कः

(ततः प्रविशत्युद्यानपालिका)

**उद्यानपालिका**—[1]उपक्षिप्तो मया कृतसत्कारविधेस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । (परिक्रम्य) अहो देवस्यानुकम्पनीया मालविका ! तस्यां तथा चण्डी देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् ! (विलोक्य) अहो, एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसिको निष्क्रामति । प्रक्ष्यामि तावदेनम् । (ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः) (उपसृत्य) सारसिक, कुत्र प्रस्थितोऽसि ?

**सारसिकः**—[2]मधुकरिके, विद्याभरितानां ब्राह्मणानां नित्यदक्षिणां मासिकीं पुरोहितस्य हस्तं प्रापयिष्यामि ।

**मधुकरिका**—[3]अथ किंनिमित्तम् ?

**सारसिकः**—[4]यदा प्रभृति सेनापतिर्यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारको वसुमित्रस्ततः प्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति ।

**मधुकरिका**—[5]अथ कुत्र देवी ? किं वानुतिष्ठति ?

**सारसिकः**—[6]मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकैर्वाच्यमानं शृणोति ।

**मधुकरिका**—[7]कः पुनर्विदर्भराजवृत्तान्तः श्रूयते ?

**सारसिकः**—[8]वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः । मोचितोऽस्य दायादो माधवसेनः । दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति ।

**मधुकरिका**—[9]गच्छानुतिष्ठात्मनो नियोगम् । अहमपि देवीं प्रेक्षिष्ये ।

(इति निष्क्रान्तौ)

## इति प्रवेशकः

(ततः प्रविशति प्रतीहारी)

प्रतीहारी—[10]आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या । विज्ञापय आर्यपुत्रेण महाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि । (इति परिक्रामति)

(नेपथ्ये वैतालिकौ)

प्रथमः—दिष्ट्यादण्डैरेव रिपुशिरस्सु वर्तते देवः ।

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

द्वितीयः—

विरचितपदं वीरप्रीत्या सुरोपमसूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥ २ ॥

प्रतीहारी—[11]एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखालोकादपसृत्य स्तम्भान्तरिता भवामि । (इत्येकान्ते स्थिता)

(प्रविश्य सवयस्यः)

राजा—कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥ ३ ॥

विदूषकः—[12]यथाहं पश्यामि । एकान्तसुखितो भवान्भविष्यति ।

**राजा**— कथमिव ?

**विदूषकः**—[13]अद्य किल देव्यैवं पण्डितकौशिकी भणिता ।—'भगवति, यस्त्वं प्रसाधनगर्वं वहसि, तद्दर्शय मालविकायाः शरीरे विवाहनैपथ्यम् ।' इति । तया स विशेषालङ्कृता मालविका । तत्रभवती कदाचित्पूरयेद्भवतोऽपि मनोरथम् ।

**राजा**—सखे, मदपेक्षामनुप्राप्य अनया धारिण्या पूर्वाचरितैः संभाव्यत एवैतत् ।

**प्रतीहारी**—(उपगम्य) [14]जयतु भर्ता ! देवी विज्ञापयति । तपनीयाशोकस्य कुसुमसहदर्शनेन ममारम्भः सफलः क्रियतामिति ।

**राजा**—ननु तत्रैव तिष्ठति ?

**प्रतीहारी**—[15]अथ किम् । यथार्हसंमानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ।

**राजा**—(सहर्षं विलोक्य विदूषकम्) जयसेने, गच्छाग्रतः ।

**प्रतीहारी**—[16]एत्वेतु देवः । (इति परिक्रामति)

**विदूषकः**—(विलोक्य) [17]भो वयस्य, किञ्चित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।

**राजा**—यथाह भवान् ।

**अग्रे विकीर्णकुरबककलजालकभिद्यमान सहकारम् ।**
**परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥**

**विदूषकः**—(परिक्रम्य) [18]अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः ! अवलोकयतु भवान् ।

**राजा**—स्थाने खलु प्रसवमन्थरोऽयमभूत् । यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य ।

**सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।**
**निर्वृत्तदोहदेऽस्मिन्संक्रान्तानीव कुसुमानि ॥ ५ ॥**

**विदूषकः**—[19]तथा । भोः, विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।

**राजा**—(सहर्षम्) सखे, पश्य ।

**मामियमभ्युत्तिष्ठति देवी विनयादुपस्थिता प्रियया ।**
**विस्मृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥**

(ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः)

**मालविका**—(आत्मगतम्) [20]जानामि निमित्तं कौतुकालङ्कारस्य । तथापि मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते । अपि च दक्षिणेतरमपि मे नयनं बहुशः स्फुरति ।

**विदूषकः**—[21]भो वयस्य, विवाहनेपथ्येन सविशेषं खलु शोभते मालविका ।

**राजा**—पश्याम्येनाम् । यैषा ।

**अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे ।**
**उडुगणैरुदयोन्मुखचन्द्रिका हृतहिमैरिव चैत्रविभावरी ॥ ७ ॥**

**देवी**—(उपेत्य) [22]जयत्वार्यपुत्रः !

**विदूषकः**—[23]वर्धतां भवती ।

**परिव्राजिका**—विजयतां देवः ।

**राजा**—भगवति, अभिवादये ।

**परिव्राजिका**—अभिप्रेतसिद्धिरस्तु ।

**देवी**—(सस्मितम्) [24]आर्यपुत्र, एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः ।

**विदूषकः**—[25]भोः, आराधितोऽसि ।

**राजा**—(सव्रीडमशोकमथिनः परिक्रामन्)

**नायं देव्या भाजनत्वं न नेयः सत्काराणामीदृशानामशोकः ।**
**यः सावज्ञो माधवश्रीनियोगे पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥**

**विदूषकः**—[26]भोः, विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य ।

**देवी**—[27]काम् ?

**विदूषकः**—[28]भवति, तपनीयाशोकस्य कुसुमशोभाम् । (सर्वे उपविशन्ति)

**राजा**—(मालविकां विलोक्य, आत्मगतम्) कष्टः खलु सन्निधिवियोगः !

**अहं रथाङ्गनामेव प्रिया सहचरीव मे ।**
**अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥**

(प्रविश्य) **कञ्चुकी**—विजयतां देवः । देव, अमात्यो विज्ञापयति । "विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते । सम्प्रति देवोपस्थानयोग्ये संवृत्ते । तदाज्ञां देवो दातुमर्हति" इति ।

**राजा**—प्रवेशय ते ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य, ताभ्यां सह प्रविश्य) इत इतो भवत्यौ ।

**प्रथमा**—(जनान्तिकम्) [29]सखि मदनिके, अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् ।

**द्वितीया**—[30]ज्योत्स्निके, अस्ति खलु लोकप्रवादः—' आगामि सुखं दुःखं वा हृदयसमवस्था कथयति ' इति ।

**प्रथमा**—[31]स सत्य इदानीं भवतु ।

**कञ्चुकी**—एष देव्या सह देवस्तिष्ठति । उपसर्पतां भवत्यौ ।

(उभे उपसर्पतः । मालविका परिव्राजिका च चेट्यौ विलोक्य परस्परमवलोकयतः)

**उभे**—(प्रणिपत्य) [32]जयतु भर्ता ! जयतु भट्टिनी ! (राजाज्ञया उभे उपविष्टे)

**राजा**—कस्यां कलायामभिविनीते भवत्यौ ?

**उभे**—[33]भर्तः, संगीतेऽभ्यन्तरे स्वः ।

**राजा**—देवि, गृह्यतामनयोरन्यतरा ।

**देवी**—[34]मालविके, इतः पश्य । कतरा ते संगीतसहचारिणी रोचते ?

**उभे**—(मालविकां दृष्ट्वा) [35]अहो भर्तृदारिका ! (इति प्रणम्य) जयतु जयतु भर्तृदारिका ! (तया सह बाष्पं विकिरतः । सर्वे सविस्मयमवलोकयन्ति)

**राजा**—के वा भवन्त्यौ ? का वा इयम् ?

**उभे**—[36]भर्तः, एषास्माकं भर्तृदारिका ।

**राजा**—कथमिव ?

**उभे**—[37]शृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम ।

**देवी**—[38]कथम्, राजदारिकेयम् ! चन्दनं खलु मया पादुकोपयोगेन दूषितम् ।

**राजा**—अथात्रभवती कथमित्थंभूता ?

**मालविका**—(निःश्वस्यात्मगतम्) [39]विधिनियोगेन !

**द्वितीया**—[40]शृणोतु भर्ता । दायादवंशगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा ।

**राजा**—श्रुतपूर्वं मयैतत् । ततस्ततः ?

**द्वितीया**—[41]भर्तः, अतः परं न जानामि ।

**परिव्राजिका**—ततः परं मन्दभागिनी कथयिष्यामि ।

**उभे**—[42]भर्तृदारिके, आर्यकौशिक्या इव स्वरसंयोगः । ननु सैव ?

**मालविका**—[43]अथ किम् ।

**उभे**—[44]यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति, नमस्ते ।

**परिव्राजिका**—स्वस्ति भवतीभ्याम् ।

**राजा**—कथम्, आप्तवर्गोऽयं भगवत्याः ?

**परिव्राजिका**—एवमेतत् ।

**विदूषकः**—[45]तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तं तावदशेषम् ।

**परिव्राजिका**—(सवैक्लव्यम्) तावच्छ्रूयताम् । माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ ।

**राजा**—उपलक्षितः । ततस्ततः ?

**परिव्राजिका**—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ।

**राजा**—ततस्ततः ?

**परिव्राजिका**—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्गणः ।

**राजा**—ततस्ततः ?

**परिव्राजिका**—ततः किं वान्यत् ?

> **तूणीरपट्टपरिबद्धभुजान्तराल-**
> **मापार्ष्णिलम्बिशिखि बर्हिकलापधारि ।**
> **कोदण्डपाणि विनदत्प्रतिरोधकाना-**
> **मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥**

(मालविका भयं रूपयति)

**विदूषकः**—[46]भवति, मा बिभेहि ! अतिक्रान्तं खलु तत्र भवती कथयति ।

**राजा**—ततस्ततः ?

**परिव्राजिका**—ततो मुहूर्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः ।

**राजा**—हन्त, इतःपरं कष्टतरं श्रोतव्यम् ।

**परिव्राजिका**—ततः सुमतिः

> **इमां परीप्सुर्जाते पराभिभवकातराम् ।**
> **भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥**

**प्रथमा**—[47]अहो, हतः सुमतिः !

**द्वितीया**—[48]अतः खलु भर्तृदारिकाया इयं समवस्था संवृत्ता ।

(परिव्राजिका बाष्पं विसृजति)

**राजा**—भगवति, तनुत्यजामीदृशी लोकयात्रा । न शोच्यस्तत्र भवान्सफलीकृतभर्तृपिण्डः । ततस्ततः ?

**परिव्राजिका**—ततोऽहं मोहमुपगता यावत्संज्ञां लभे, तावदियं दुर्लभदर्शना संप्रवृत्ता ।

**राजा**—महत्खलु कृच्छ्रमनुभूतं भगवत्या ।

